श्रीगणेशाय नमः ।



मुद्रक और प्रकाशक-
गङ्गाविष्णु श्रीकृष्णदास,
मालिक-" लक्ष्मीवेङ्कटेश्वर " स्टीम्-प्रेस, कल्याण-बंबई.

ॐ श्रीगणेशायनमः ॥ हरिः ॐ ॥ अथ प्रयोजनसंहिताप्रारं
मः ॥ तत्र संध्यामंत्राः ॥ ॐतत्सवितुर्व्वरेण्यम्भर्गोदेवस्यधी
महि ॥ धियोयोनः प्रचोदयात् ॥ १ ॥ ॐ सूर्य्यश्चमामन्युश्च
मन्युपतयश्चमन्युकृतेभ्यः। पापेभ्योरक्षन्ताम्। यद्रात्र्यापापम
कार्षम्मनसावाचाहस्ताभ्याम्। पद्भ्यामुदरेण शिश्ना रात्रिस्त
दवलुंपतु यत्किञ्चिद्दुरितंमयि । इदमहंमाममृतयोनौसूर्य्येज्यो
तिषि जुहोमि स्वाहा ॥ २ ॥ ॐ आपः पुनन्तु पृथिवीं पृथ्वी

पूतापुनातुमां पुनन्तुब्रह्मणस्पतिर्ब्रह्मपूतापुनातुमां यदुच्छिष्ट
मभोज्यंचयद्वादुश्चरितंमम सर्वम्पुनन्तुमामापोसताञ्चप्रतिग्र
हछंस्वाहा ॥ ३ ॥ ॐ अग्निश्चमामन्युश्चमन्युपतयश्चमन्यु
कृतेभ्यः।पापेभ्योरक्षन्ताम् । यदह्नापापमकार्षम्मनसावाचाह
स्ताभ्याम् ।पद्भ्यामुदरेणशिश्नाअहस्तदवलुम्पतु यत्किञ्चिदुरि
तंमयिइदमहम्मामममृतयोनौ सत्येज्योतिषि जुहोमिस्वाहा
॥ ४ ॥ ॐ आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन । मुहेर

णायचक्षसे ॥ ५ ॥ योवः शिवतमोरसस्तस्यभाजयतेहनः ।
उशतीरिवमातरः ॥ ६ ॥ तस्माऽअरंगमामवोयस्यक्षयाय
जिन्वथ ॥ आपोजनयथाचनः ॥ ७ ॥ ॐसुमित्रियानऽआप
ऽओषधयः सन्तु दुर्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियञ्च
वयंद्विष्मः ॥८॥ ॐद्रुपदादिवमुमुचानः स्विन्नःस्नातोमलादि
व ॥पूतंपवित्रेणेवाज्यमापःशुन्धन्तुमैनसः ॥ ९ ॥ ॐऋत
ञ्चसत्यञ्चाभीद्धात्तपसोध्यजायत ततोरात्र्यजायततत:समुद्रो

अर्णवः समुद्रादर्णवादधिसंवत्सरोऽअजायत अहोरात्राणिवि
दधद्विश्वस्यमिषतोवशी सूर्याचन्द्रमसौधातायथापूर्वमकल्प
यत् दिवञ्चपृथिवीञ्चान्तरिक्षमथोस्वः ॥ १० ॥ ॐउद्वयन्तम
सस्परिस्वः पश्यन्तऽउत्तरम् । देवन्देवत्रासूर्यमगन्मज्ज्यो
तिरुत्तमम् ॥११॥ ॐ उदुत्यञ्जातवेदसन्देवंवहन्तिकेतवः ॥
दृशेविश्वायसूर्यम् ॥ १२ ॥ ॐ चित्रन्देवानामुदगादनीकञ्च
क्षुर्म्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीऽअन्तरि

क्षर्ठसूर्यऽआत्माजगतस्तस्थुषश्च ॥१३॥ ॐतच्चक्षुर्देवहितम्पु
रस्ताच्छुक्रमुच्चरत्॥ पश्येमशरदःशतञ्जीवेमशरदःशतर्ठशृणुया
मशरदःशतम्प्रब्रवामशरदःशतमदीनाःस्यामशरदःशत
म्भूयश्चशरदःशतात् ॥१४॥ ॐतेजोसिशुक्रममृतमायुष्पाऽ
आयुर्मेपाहि। देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पू
ष्णोहस्ताभ्यामाददे ॥१५॥ देवागातुविदोगातुंवित्त्वागातु
मित। मनसस्पतऽइमन्देवयज्ञर्ठस्वाहावातेधाः॥१६॥अथ

तर्प्पणमन्त्राः ॥ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथि
भिर्द्देवयानैः ॥ अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्व
स्मान् ॥ १ ॥ उदीरतामवर उत्परास उन्मध्यमाः पितरः सो
म्यासः ॥ असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु
॥ २ ॥ अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्या
सः ॥ तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥ ३ ॥
ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम् ॥ स्वधा

स्थंतुर्प्पयंतमेपितॄन् ॥ ४ ॥ पितृभ्यः स्वधायिभ्यः स्वधा
नमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहे
भ्यः स्वधायिभ्यः स्वधानमः ॥ अक्षन्पितरोमीमदन्तपि
तरोतीतृपन्तपितरः पितरः शुन्धध्वम् ॥ ५ ॥ येचेहपितरोयेचने
हयाँश्चविद्मयाँ ॥ ऽउंचनप्रविद्म ॥ त्वंवेत्थयतितेजातवेदः
स्वधाभिर्यज्ञꣳसुकृतंजुषस्व ॥ ६ ॥ मधुवाताऽऋतायतेम
धुक्षरन्तिसिन्धवः ॥ माध्वीर्नःसन्त्वोषधीः ॥ ७ ॥ मधुनक्तं

मुतोषसोमधुमत्पार्थिवꣳरजः ॥ मधुद्यौरस्तुनःपिता ॥ ८ ॥
मधुमान्नोवनस्पतिर्म्मधुमाꣳ२ ॥ ऽअस्तुसूर्य्यः ॥ माद्ध्वीर्ग्गावो
भवन्तुनः ॥ ९ ॥ नमोवःपितरोरसायनमोवःपितरःशोषाय
नमोवः पितरोजीवायनमोवः पितरःस्वधायैनमोवः पितरो
घोरायनमोवःपितरोमन्यवेनमोवःपितरः पितरोनमोवोगृहा
न्नःपितरोदत्तसतोवः पितरोदेष्मैतद्वः पितरोवासः ॥ १० ॥
॥ अथपूजनमन्त्राः ॥ ॐ महीद्यौः पृथिवीचनऽइमंय्यज्ञम्मि

मिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ १ ॥ भूतशुद्धिमन्त्रः ॥
ॐयेभूतानामधिपतयोविशिखासः कपर्दिनः ॥ तेषांᳫंसहस्र
योजनेवधन्वानितन्मसि ॥ २ ॥ मातृकामन्त्रः ॥ ॐ अम्बेऽ
अम्बिकेऽम्बालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकःसुभद्रि
काङ्काम्पीलवासिनीम् ॥ ३ ॥ प्राणप्रतिष्ठामन्त्राः ॥ समुद्र
स्यत्वावकयाग्नेपरिव्ययामसि ॥ पावकोऽअस्मभ्यᳫंशि
वोभव ॥ ४ ॥ हिमस्यत्वाजरायुणाग्नेपरिव्ययामसि ॥

पावकोऽअस्म्मभ्यंᳯशिवोभव ॥५॥ उपज्ज्मन्नुपवेतसेवतरन्

दीष्ष्वा ॥ अग्नेपित्तमुपामसिमण्डूकित्ताभिरागहिसेमन्नोयज्ञ

म्पावकवर्ण्णᳯशिवङ्कृधि ॥ ६ ॥ अपामिदन्न्ययनᳯसमुद्रस्य

निवेशनम् ॥ अन्न्यांस्तेऽअस्म्मत्तपन्तुहेतयः पावकोऽअस्म्म

भ्यᳯशिवोभव ॥ ७ ॥ अग्नेपावक रोचिषा मन्द्रया देवजि

ह्वया ॥ आदेवान्वक्षियक्षिच ॥८॥ सनः पावकदीदिवोग्नेदेवाँ२

ऽइहावह ॥ उपयज्ञᳯहविश्चनः ॥९॥पावकयायश्चितयन्त्याकृ

पाक्षामन्द्रुरुचऽउषसोनभानुना ॥ तूर्व्वन्नयामन्नेतशस्यनूरणऽ
आयोघृणेनततृषाणोऽअजरः ॥ १० ॥ नमस्तेहरसेशोचिषे
नमस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्मत्तपन्तुहेतयः पाव
कोऽअस्मभ्यंशिवोभव ॥ ११ ॥ नृषदेवेडप्सुषदेवेड्बर्हिष
देवेड्वनसदेवेट्स्वर्विदेवेट् ॥ १२ ॥ येदेवादेवानांयज्ञियायज्ञिया
नाᳬसंवत्सरीणमुपभागमासते ॥ अहुतादोहविषोयज्ञेऽअ
स्मिन्त्स्वयम्पिबन्तुमधुनोघृतस्य ॥ १३ ॥ येदेवादेवेष्व

घिदेवुत्त्वमायुन्न्येब्रह्मणःपुरऽएतारोऽअुस्य ॥ येऽग्नयोनऽऋुते
पर्वतुधामुकिञ्चनतेदिवोनपृथिव्याऽअधिस्नुषु ॥ १४ ॥
प्राणदाऽअपानुदाव्व्यानुदावर्च्चोदावारिवोदाः ॥ अन्न्याँस्तेऽअ
स्म्मत्तपन्तुहेतयःपावकोऽअस्म्मब्भ्यंशिवोभव ॥ १५ ॥
॥४॥ ॐ अयम्पुरोभुवस्तस्यप्प्राणोभौवायुनोवसन्तःप्राणा
यनोगायत्त्रीवासन्तीगायत्त्र्यैगायत्त्रङ्गायत्त्रादुपांशुरुपांशो
स्त्रिवृत्त्रिवृतो रथन्तरं वासिष्ठऽऋषिःप्रजापतिगृहीतयात्वया

प्प्राणङ्गृह्णामि प्प्रजाभ्यः ॥४॥ अयन्दक्षिणा विश्श्वकर्म्मा तस्य मनो वैश्श्वकर्म्मणङ्ग्रीष्म्मो मानसस्त्रिष्टुब्ग्रैष्म्मी त्रिष्टुभः स्वारं स्वारादन्तर्य्यामोऽन्तर्य्यामात्पञ्चदशः पञ्चदशाद्बृहद्बृहतो भरद्वाज ऋषिः प्प्रजापतिगृहीतया त्वया मनो गृह्णामि प्प्रजाभ्यः ॥५॥ अयम्पश्श्चाद्विश्श्वव्यचास्तस्य चक्षुर्वैश्श्वव्यचसं वर्षाश्श्चाक्षुष्यो जगती वार्षी जगत्या ऋक्समम् ऋक्समाच्छुक्रः शुक्रात्सप्तदशः ॥ सप्तदशाद्वैरूपञ्जमदग्निर्ऋषिः प्प्रजापतिगृही

तयात्वयाचक्षुर्गृह्णामिप्प्रजाब्भ्यः ॥६॥ इदमुत्तरात्स्वस्तस्यु
श्श्रोत्रꣳसौवꣳशरच्छ्रौत्र्यनुष्टुप्प्शारद्यनुष्टुभऽऐडमैडान्मन्थीम
न्थिनंऽएकविꣳशऽएकविꣳशाद्वैराजंव्विश्वामित्रऽऋषिःप्प्र
जापतिगृहीतयात्वयाश्श्रोत्रङ्गृह्णामिप्प्रजाब्भ्यः ॥७॥ इयमुप
रिमतिस्तस्यैवाङ्मात्याहेमन्तोव्वाच्यः पङ्क्तिर्हैमन्तीपङ्क्त्यैनिध
नंवान्निधनवतऽआग्रयणऽ आग्रयणात्त्रिणवत्रयस्त्रिꣳशौत्रिण
वत्रयस्त्रिꣳशाब्भ्याꣳशाक्वररैवतेव्विश्वकर्म्मऽऋषिःप्प्रजापति

गृहीतया त्वया वाचंङ्गृह्णामि प्रजाभ्यो लोकन्ताऽइन्द्रम्
॥८॥ पञ्चगव्यमन्त्राः॥ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि॥
धियोयोनः प्रचोदयात् ॥ ९ ॥ गन्धद्वारांदुराधर्षांनित्यपुष्टां
करीषिणीम् ॥ ईश्वरींसर्वभूतानां तामिहोपह्वयेश्रियम्॥१०॥
आप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम् ॥ भवावाजस्य
सङ्गथे ॥ ११ ॥ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्यवाजि
नः ॥ सुरभिनोमुखाकरत्प्रणऽआयूंषितारिषत् ॥ १२ ॥

घृतम्मिमिक्षे घृतमस्स्य योनिर्घृतेश्श्रितोघृतम्वस्स्य धाम ॥
अनुष्वधमावहमादयस्स्वस्स्वाहाकृतंवृषभवक्षिहव्यम् ॥ १३ ॥
देवस्यत्त्वासवितुः प्प्रसवेश्श्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्ताब्भ्या
म् ॥ १४ ॥ देवतोत्थापनमन्त्रः ॥ ॐ उत्तिष्ठब्ब्रह्मण
स्स्पतेदेवयन्तस्त्वेमहे ॥ उपप्प्रयन्तुमरुतः सुदानवऽइन्द्रप्प्रा
शूर्भवासचा ॥ १५ ॥ प्रतिष्ठामन्त्रः ॥ ॐ मनोजूतिर्ज्जुष
तामाज्ज्यस्स्यबृहस्प्पतिर्य्यज्ञमिमन्तनोत्त्वरिष्टंय्यज्ञꣳसमिम

न्दधातु ॥ व्विश्वेदेवासऽइहमादयान्तामोम्प्रतिष्ठ ॥ १६ ॥
आवाहनमन्त्रः ॥ द्यामुच्छदग्निरिन्द्रोब्रह्मादेवोबृहस्पतिः ॥
सचेतसोविश्वेदेवायज्ञम्प्रावन्तुनःशुभे ॥ १७ ॥ आसन
मन्त्रः ॥ त्वंयविष्ठदाशुषोनॄंःपाहिशृणुधीगिरः ॥ रक्षातोकमु
तत्मना ॥ १८ ॥ अर्घमन्त्रः ॥ ॐसहस्रशीर्षापुरुषःसह
स्राक्षःसहस्रपात् ॥ सभूमिंसर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥
॥ १९ ॥ आचमनमन्त्रः ॥ ॐशन्नोदेवीरभिष्टयऽआपोभव

न्तु पीतये ॥ शंय्योरभिस्रवन्तुनः ॥ २० ॥ स्नानमन्त्रः ॥
आपोहिष्ठामयोभुवस्तानऽऊर्जेदधातन ॥ महेरणायचक्षसे ॥ २१ ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिव मातरः ॥ २२ ॥ तस्म्माऽअरङ्गमाम वो यस्य क्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ २३ ॥ अथपञ्चामृतस्नानमन्त्राः ॥ तत्र पयोमन्त्रः ॥ ॐ पयःपृथिव्याँ पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वतीः

प्प्रदिशंः सन्तुमह्यम् ॥ २४ ॥ दधिमन्त्रः ॥ ॐदधिक्क्रा
व्ण्णोऽअकारिषञ्जिष्णोरश्वस्स्यव्वाजिनंः ॥ सुरभिनोमुखाकर
त्प्रणऽआयू॑ᳪषितारिषत् ॥ २५ ॥ घृतमन्त्रः ॥ घृतम्मि
मिक्षेघृतमस्स्ययोनिर्घृतेश्रितोघृतम्म्वस्स्यधाम ॥ अनुष्ष्वधमा
वहमादयस्स्वस्वाहाकृतंव्वृषभव्वक्षिहव्यम् ॥ २६ ॥ मधुमन्त्रः ॥
मधुव्वाताऽऋतायतेमधुक्षरन्तिसिन्धवः ॥ माद्ध्वीर्न्नः सन्त्वो
षधीः ॥ २७ ॥ मधुनक्तमुतोषसोमधुमत्पार्थिवᳪरजः ॥

मधुद्यौरस्तुनःपिता ॥ २८ ॥ मधुमान्नोवनस्पतिर्म्मधुमाँ२
ऽअस्तुसूर्य्यः ॥ माध्वीर्गावोभवन्तुनः ॥ २९ ॥ शर्करामन्त्रः ॥
ॐअपाᳪरसमुद्वयसᳩसूर्य्येसन्तᳩसमाहितम् । अपाᳪरस
स्ययोरसस्तंवोगृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय त्वाजुष्टं
गृह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टतमम् ॥ ३० ॥ पुनःशुद्धो
दकस्नानमन्त्रः ॥ शुद्धवालःसर्वशुद्धवालोमणिवालस्त
आश्विनाःश्येतः श्येताक्षोरुणस्तेरुद्रायपशुपतयेकर्णायामाअव

लिप्सारौद्रानभोरूपाःपार्जन्याः॥ ३१ ॥ वस्त्रमन्त्रः ॥ ॐ
युवासुवासाः परिवीतऽआगात्सऽउश्रेयान्भवति जायमानः॥
तंधीरासः कवयऽउन्नयन्तिस्वाध्यो मनसादेवयन्तः ॥ ३२ ॥
अथ यज्ञोपवीतमन्त्रः॥ ॐयज्ञोपवीतंपरमंपवित्रम्प्रजापतेर्यत्स
हजंपुरस्तात् ॥ आयुष्यमग्र्यंप्रतिमुञ्चशुभ्रंयज्ञोपवीतंबलमस्तु
तेजः ॥३३॥ अथसुगंधिद्रव्यमंत्रः ॥ ॐ अहिरिवभोगैःपर्येति
बाहुंज्यायाहेतिम्परिबाधमानःहस्तघ्नोविश्वावयुनानिविद्वान्

पुमान्पुमां२ऽसुम्परिपातुविश्वतः ॥ चन्दनमंत्रः ॥ ॐत्वाङ्गन्धर्वाऽ
अंखनुंस्त्वामिन्द्रस्त्वाम्बृहस्पतिः त्वामोषधेसोमो राजाविद्वा
न्यक्ष्मादमुच्यत ॥ ३४ ॥ अक्षतमन्त्रः ॥ ॐअक्षन्नमीमदन्त
ह्यवंप्प्रियाऽअंधूषत ॥ अस्तोषतस्स्वभानवोविप्प्रानविष्ठया
मतीयोजान्विन्द्रतेहरी ॥ ३५ ॥ पुष्पमन्त्रः ॥ ॐयत्पुरुषु
म्व्यदधुःकतिधाव्यकल्पयन् ॥ मुखङ्किमस्यासीत्किम्बाहूकिमू
रूपादाऽउच्च्येते ॥ ३६ ॥ बिल्वमन्त्रः ॥ त्र्यम्बकंयजामहे

सुगन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात् ॥ ३७ ॥ तुलसीमन्त्रः ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳪंसुरेस्वाहा ॥ ३८ ॥ दूर्वामन्त्रः ॥ ॐकाण्डात्काण्डात्प्ररोहन्तीपरुषःपरुषस्परि ॥ एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥ ३९ ॥ धूपमन्त्रः ॥ ॐ धूरसिधूर्व्वधूर्व्वन्तन्धूर्व्वतंय्योस्मान्धूर्व्वतितन्धूर्व्वयंव्वयन्धूर्व्वामः ॥ देवानामसिवह्नितमᳪंसस्नितमम्पप्रितमञ्जुष्टतमन्देवहू

तंम्मम् ॥ ४० ॥ दीपमन्त्रः ॥ ॐ अग्निर्ज्ज्योतिर्ज्ज्योतिरग्निः
स्वाहा सूर्य्यो ज्ज्योतिर्ज्ज्योतिः सूर्य्यः स्वाहा ॥ अग्निर्वर्च्चो ज्ज्यो
तिर्वर्च्चः स्वाहा सूर्य्यो वर्च्चो ज्ज्योतिर्वर्च्चः स्वाहा ॥ ज्ज्योतिः सूर्य्यः
सूर्य्यो ज्ज्योतिः स्वाहा ॥ ४१ ॥ नैवेद्यमन्त्रः ॥ ॐ अन्नपतेन्न
स्स्य नो देह्यनमीवस्य शुष्मिणः ॥ प्प्रंदातारंतारिषऽऊर्ज्जंन्नो
धेहि द्विपदे चतुष्पदे ॥ ४२ ॥ फलमन्त्रः ॥ ॐ याः फलिनी
र्य्याऽअफलाऽअपुष्प्पा याश्च पुष्प्पिणीः ॥ बृहस्पतिप्रसूता

स्तानोमुञ्चन्त्वꣳहसः ॥ ४३ ॥ दक्षिणामन्त्रः ॥ ॐ हिरण्य गर्भःसमवर्त्तताग्ग्रेभूतस्यजातःपतिरेकऽआसीत् । सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥४४ ॥ आर्तिक्य मन्त्रः ॥ आरात्रिपार्थिवꣳरजःपितुरप्प्रायिधामभिः ॥ दिवःसदाꣳसिबृहतीवितिष्ठसऽआत्त्वेषंवर्त्ततेतमः ॥ ४५ ॥ पुष्पाञ्जलिमन्त्रः ॥ ॐ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्प्रथमान्यासन् ॥ तेहनाकम्महिमानःसचन्तयत्रपूर्वेसाद्ध्याः

सान्तिदेवाः ॥ ४६ ॥ अथस्वस्त्ययनमन्त्राः ॥ हरिः ॐ स्वस्ति
नऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः ॥ स्वस्ति
नस्ताक्ष्यौऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ १॥ पयः
पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः ॥ पयस्वन्
तीःप्रदिशःसन्तुमह्यम् ॥ २ ॥ विष्णोरराटमसिविष्णोःश्न
प्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवे
त्वा ॥ ३ ॥ अग्निर्देवतावातोदेवतासूर्य्योदेवताचन्द्रमादेवता

वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवता विश्वेदेवा देव
ता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता ॥ ४ ॥ द्यौः शान्तिरन्
न्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ।
वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः
शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ ५ ॥ विश्वानि देव स
वितर्दुरितानि परासुव ॥ यद्भद्रन्तन्नऽआसुव ॥ ६ ॥ इमा रुद्रा
य तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः ॥ यथा शमसद्द्विपदे

चतुष्पदेविश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥ ७ ॥ एतन्ते
देवसवितर्य्यज्ञम्प्राहुर्बृहस्प्पतयेब्रह्मणे ॥ तेनयज्ञमवतेनयज्ञ
पतिन्तेनमामव ॥ ८ ॥ मनोजूतिर्जुषतामाज्ज्यस्यबृहस्प्पति
र्य्यज्ञमिमन्तनोत्त्वरिष्टं य्यज्ञठंसमिमन्दधातु ॥ विश्वेदेवास
ऽइहमादयन्तामोँ३ प्प्रतिष्ठ ॥ ९ ॥ एषवैप्रतिष्ठानामयज्ञोयत्त्रै
तेनयज्ञेनयजन्तेसर्व्वमेवप्प्रतिष्ठितम्भवति ॥ १० ॥ गणा
नान्त्वा गणपतिठंहवामहे प्प्रियाणान्त्वाप्प्रियपतिठंहवाम

हेनिधीनान्त्वानिधिपतिꣳहवामहेवसोमम ॥ आहमजा
निगर्भधमात्वमजासिगर्भधम् ॥ ११ ॥ नमोगणेभ्योगण
पतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्च वोनमो
नमोगृत्सेभ्यो गृत्सपतिभ्यश्चवोनमोनमोविरूपेभ्योविश्व
रूपेभ्यश्चवोनमः ॥ १२ ॥ अथकलशस्थापनादिमन्त्राः ॥
भूस्पर्शः ॥ भूरसिभूमिरस्यदितिरसि विश्वधायाविश्वस्यभु
वनस्यधर्त्री ॥ पृथिवींयच्छपृथिवीन्दृꣳहपृथिवींमाहिꣳसीः

॥ १ ॥ धान्यप्रक्षेपमन्त्रः ॥ धान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्त्वाव्यानायत्त्वा ॥ दीर्घामनुप्रसितिमायुषेधान्देवोवःसविताहिरण्यपाणिःप्रतिगभ्णात्त्वच्छिद्रेणपाणिना चक्षुषेत्वामहीनाम्पयोसि ॥ २ ॥ कलशस्थापनमन्त्रः ॥ आजिग्घ्रकलशम्मह्यात्त्वाविशन्त्विन्दवः॥ पुनरूर्ज्जानिवर्त्तस्वसानःसहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः ॥३॥ जलमंत्रः॥वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्थोवरु

णस्यऽऋतुसदन्न्यसिवरुणस्यऽऋतुसदंनमसिवरुणस्यऽऋतुसदं
नमासीद ॥४॥ वसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्त्र
धारम् ॥ देवस्त्वासविितापुनातुवसोःपवित्रेणशतधारेणसुप्प्वा
कामंधुक्षः ॥५॥ फलमन्त्रः ॥ याःफलिनीर्य्याऽअफलाअपुष्पा
याश्चपुष्पिणीः ॥ बृहस्स्पतिप्रसूतास्तानोमुञ्चन्त्वꣳहसः ॥६॥
पञ्चरत्नमन्त्रः ॥ परिवाजपतिःकविरग्निर्हव्यान्न्यक्रमीत् ॥
दधद्रत्नानिदाशुषे ॥ ७ ॥ हिरण्यमन्त्रः ॥ हिरण्यगर्भःसमव

र्त्तताग्ग्रेभूतस्यंजातऽपतिरेकऽआसीत् ॥ सदाधारपृथिवीन्द्या मुतेमाङ्कस्मैदेवायंहविषांव्विधेम ॥ ८ ॥ गन्धमन्त्रः ॥ त्वाङ्ग न्धुर्वाअखनुँस्त्वामिन्द्रस्त्वाम्बृहस्स्पतिः ॥ त्वामोषधेसोमोरा जांव्विद्वान्यक्ष्मांदमुच्यत ॥ ९ ॥ ओषधीमंत्रः ॥ याऽओष धीःसोमराज्ञीर्ब्बह्वीःशतविचक्षणाः ॥ तासामसित्वमुत्तमारङ्का मायुशहृदे ॥ १० ॥ मृत्तिकामन्त्रः ॥ स्योनापृथिविनोभ वानृक्षरानिवेशनी॥यच्छानःशर्म्मसप्प्रथाः॥ ११॥दूर्वामन्त्रः॥

काण्डात्काण्डात्प्ररोहन्ती परुषःपरुषस्परि ॥ एवानोदूर्वेप्रतनु सहस्रेणशतेनच ॥ १२ ॥ अश्वत्थपत्रमन्त्रः ॥ अश्वत्थेवोनिषदनम्पर्णेवोवसतिष्कृता ॥ गोभाजइत्किलासथयत्सनवथपूरुषम् ॥ १३ ॥ धान्यपूरणमन्त्रः ॥ पूर्णादर्विपरापतसुपूर्णापुनरापत ॥ वस्नेवविक्रीणावहाइषमूर्जंशतक्रतो ॥ १४ ॥ आवाहनमन्त्रः ॥ तत्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशंसमानआयुः

प्प्रमोषीः ॥ १५ ॥ अथ पुण्याहवाचनमन्त्राः ॥ सुवितात्वा सुवानांᳬंसुवतामुग्निर्गृहपतीनाᳬंसोमोवनुस्पतीनाम् ॥ बृहस्पतिर्व्वाचऽइन्द्रोज्ज्यैष्ठ्यांयरुद्रःपुशुब्भ्योमित्रःसुत्त्योवरुणोधर्म्मपतीनाम् ।१। नतद्रक्षाᳬंसिनपिशाचास्तरन्तिदेवानामोजः प्प्रथमुजᳬंह्येतत् ॥ योबिभर्त्तिदाक्षायुणᳬंहिरण्यᳬंसदेवेषुकृणुतेदीर्घमायुःसमनुष्येषुकृणुतेदीर्घमायुः ।२। उच्चातेजातमन्धसोदिविसद्भूम्म्यादंदे ॥ उग्रᳬंशर्म्ममहिश्रवः ॥ ३ ॥ पुनन्तु



मादेवजनाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥४॥ यथेमांवाचंकल्याणीमावदानिजनेभ्यः॥ ब्रह्मराजन्याभ्यांशूद्रायचार्यायचस्वायचारणायच ॥ प्रियोदेवानांदक्षिणायैदातुरिहभूयासमयंमेकामः समृध्यतामुपमादोनमतु ॥ ५॥ सत्रस्यऽऋद्धिरस्यगन्मज्ज्योतिरमृताऽअभूम॥ दिवम्पृथिव्याऽअध्यारुहामाविदामदेवान्त्स्वर्ज्ज्योतिः ॥६॥ स्वस्तिनऽइन्द्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥



स्वस्तिनस्ताक्ष्र्योअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्दधातु ॥ ७ ॥
श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपम
श्विनौव्यात्तम ॥ इष्णन्निषाणामुम्मऽइषाणसर्वलोकम्मऽइ
षाण ॥ ८ ॥ अथ षोडशमातृकामन्त्राः ॥ तत्र गौरीमन्त्रः ॥
ॐ शर्म्मास्यवधूतठंरक्षोवधूताऽअरातयोदित्यास्त्वगसिप्प्रति
त्वादितिर्वेत्तु । अद्रिरसिवानस्पत्त्योग्रावासिपृथुबध्नः प्प्रति
त्वादित्यास्त्वग्वेत्तु ॥१॥ अथ पद्मामन्त्रः ॥ ॐ पावकानः

सरस्वतीव्वाजेभिर्व्वाजिनीवती ॥ यज्ञंवष्टुधियावसुः ॥ २ ॥
अथ शचीम० ॥ निवेशनःसङ्गमनोवसूनांविश्वारूपाभिचष्टे
शचीभिः ॥ देवऽइवसवितासत्त्यधर्म्मेन्द्रोनतस्थौसमरेपथी
नाम् ॥ ३ ॥ अथ मेधाम० ॥ ॐमेधाम्मेवरुणोददातुमेधाम
ग्निःप्प्रजापतिः ॥ मेधामिन्द्रश्श्चवायुश्श्चमेधान्धाताददातुमे
स्स्वाहा ॥ ४ ॥ अथ सावित्रीम० ॥ ॐसवितात्त्वासवानाᳬं
सुवतामग्निर्ग्गृहपतीनाᳬंसोमोवनस्प्पतीनाम् ॥ बृहस्प्पति

वाचऽइन्द्रोज्ज्यैष्ठ्यायरुद्रः पशुभ्योमित्रःसत्त्योवरुणोधर्म्मप
तीनाम् ॥ ५ ॥ अथ विजयाम० ॥ ॐ प्राणायस्वाहापाना
यस्वाहा व्यानायस्वाहा ॥ अम्बेऽअम्बिकेऽम्बालिकेनमा
नयतिकश्चन ॥ ससस्त्यश्वकःसुभद्रिकाङ्काम्पीलवासि
नीम् ॥ ६ ॥ अथ जयाम० ॥ ॐ बह्वीनाम्पिताबहुरस्यपुत्र
श्चिश्चाकृणोतिसमनावगत्य ॥ इषुधिःसङ्काःपृतनाश्चसर्वाः
पृष्ठेनिनद्धोजयतिप्प्रसूतः ॥ ७ ॥ अथ देवसेनाम० ॥ ॐ इन्द्रऽ

आसान्नेताबृहस्पतिर्द्दक्षिणायज्ञःपुरऽएतुसोमः॥ देवसेनानाम
भिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्ग्रम ।८।अथस्वधाम०।
ॐ पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधा
यिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधान
मः॥ अक्षन्पितरोमीमदन्तपितरोतीतृपन्तपितरः पितरः शुन्ध
ध्वम ॥ ९ ॥ अथ स्वाहाम० ॥ स्वाहाप्प्राणेभ्यः साधिपति
केभ्यः ॥ पृथिव्यैस्वाहाग्ग्नयेस्स्वाहान्तरिक्षायस्स्वाहावाय

वेस्स्वाहा ॥ दिवेस्स्वाहासूर्य्यायस्स्वाहा॥ १०॥ अथ मातृम० ॥
ॐ अनाधृष्टापुरस्तादग्नेराधिपत्त्यऽआयुर्म्मेदाः पुत्रवतीदक्षिण
तऽइन्द्रस्याधिपत्येप्प्रजाम्मेदाः सुखदापुश्चाहेवस्स्य सवितुरा
धिपत्येचक्षुर्म्मेदाऽआश्रुतिरुत्तरतो धातुराधिपत्त्येरायस्स्पोषं
म्मदाः॥ विधृतिरुपरिष्टादबहस्पतेराधिपत्त्यऽओजोमेदाविश्वा
भ्योमानाष्ट्राभ्यस्प्पाहिमनोरश्वासि ॥ ११ ॥ अथ लोकमा
तृम० ॥ ॐ रयिश्चमेरायश्चमेपुष्टञ्चमेपुष्टिश्चमेविभुचमेप्रभुचं

मेपूर्णञ्च मे पूर्णतरञ्चमेकुयवञ्चमेक्षितञ्चमेन्नंञ्च मेक्षुच्चमेयज्ञेन
कल्पन्ताम्॥१२॥ अथ धृतिम०॥ ॐभद्रङ्कर्णेभिःशृणुयामदे
वाभद्रम्पश्येमाक्षभिर्यजत्राः।स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभिर्व्य
शेमहिदेवहितंयदायुः ॥१३॥ अथ पुष्टिम०॥ ॐअङ्गान्यात्म
न्भिषजातदश्विनात्मानमङ्गैःसमधात्सरस्वती ॥ इन्द्रस्य
रूपᳬशतमानमायुश्चन्द्रेणज्योतिरमृतन्दधाना ॥१४॥ अथ
तुष्टिम०।ॐजातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः।

सनः पर्षदतिदुर्गाणिविश्वानावेवसिन्धुन्दुरितात्यग्निः ॥१५॥ अथ कुलदेवताम० ॥ ॐवसोःपवित्रमसिशतधारम्वसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुवसोःपवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ १६ ॥ अथ नवग्रहमन्त्राः ॥ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ १ ॥ इमन्देवाऽअसपत्नꣳसुवद्ध्वंमहतेक्षत्रायमहतेज्यैष्ठ्याय महते जानराज्यायेन्द्र

स्स्येन्द्रियाय ॥ इमममुष्यंपुत्रममुष्यैपुत्रमस्स्यैव्विशऽएषवो
मीराजासोमोस्म्माकम्ब्राह्मणानाᳬंराजा ॥ २ ॥ अग्निर्म्मूर्द्धा
दिवःक्ककुत्पतिः पृथिव्याऽअयम् ॥ अपाᳬंरेताᳬंसिजिन्न्वति ॥
॥ ३ ॥ ॐउद्बुद्ध्यस्स्वाग्नेप्प्रतिजागृहित्त्वमिष्टापूर्तेसᳬंसृजेथा
मयञ्च ॥ अस्मिन्न्सधस्थेऽअद्ध्युत्तरस्मिन्विश्श्वेदेवायजमा
नश्च सीदत ॥ ४ ॥ बृहस्प्पतेऽअतियदर्य्योऽअर्हाद्युमद्विभाति
क्क्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्प्रजाततदस्म्मासुद्द्रविण

न्धेहिचित्रम् ॥ ५ ॥ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत्क्षत्र
म्पयःसोमम्प्रजापतिः ॥ ऋतेनसत्यमिन्द्रियंविपानꣳशुक्रम
न्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ६ ॥ शन्नोदेवीरभि
ष्टयऽआपोभवन्तुपीतये ॥ शंय्योरभिस्रवन्तुनः ॥ ७ ॥ कया
नश्चित्रऽआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता
॥ ८ ॥ केतुङ्कृण्वन्नकेतवेपेशोमर्य्याऽअपेशसे ॥ समुषद्भि
रजायथाः ॥ ९ ॥ अथनवग्रहाधिदेवतामन्त्राः ॥ त्र्यम्बकं

म्ब्यजामहे सुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबन्धनान्मृ
त्योर्म्मुक्षीयमामृतात् ॥ १ ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरा
त्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽ
इषाणसर्व्वलोकम्मऽइषाण ॥ २ ॥ यदक्रन्दःप्रथमञ्जा
यमानःउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्य
बाहूऽउपस्तुत्यम्महिजातन्तेऽअर्व्वन् ॥ ३ ॥ विष्णोरराटम
सिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णव

मसि विष्णवे त्वा ॥ ४ ॥ ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसी
मतः सुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाः सत
श्चयोनिमसतश्चविवः ॥ ५ ॥ त्रातारमिन्द्रमवितारमिन्द्र
ꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्व
स्तिनोमघवाधात्विन्द्रः ॥ ६ ॥ यमायत्वामखायत्वासूर्य
स्यत्वातपसे ॥ देवस्त्वासवितामध्वानक्तुपृथिव्याःसꣳस्पृश
स्पाहि ॥ अर्चिरसिशोचिरसितपोसि ॥ ७ ॥ कार्षिरसिसमुद्र

स्यत्वाक्षित्याऽउन्नयामि ॥ समापोऽअद्भिरंग्मतुसमोषधीभि
रोषधीः ॥ ८ ॥ चित्रावसोस्वस्तितेपारमशीय ॥ ९ ॥ अथ
प्रत्याधिदेवतामन्त्राः ॥ ॐ अग्निन्दूतम्पुरोदधेहव्यवाहमुप
ब्रुवे ॥ देवाँ २ ॥ ऽआसादयादिह ॥ १ ॥ अप्स्वग्नेसधिष्ट्व
सौषधीरनुरुद्ध्यसे ॥ गर्भेसञ्जायसेपुनः ॥ २ ॥ स्योना
पृथिविनोभवानृक्षरानिवेशनि ॥ यच्छानःशर्म्मसप्रथाः॥३॥
इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाꣳसुरेस्वा

हाँ ॥ ४ ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमि
न्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः
॥ ५ ॥ अदित्यैरास्नासीन्द्राण्याऽउष्णीषः ॥ पूषासिघर्माय
दीष्व ॥ ६ ॥ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिता
बभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तु वयꣳस्यामपतयोरयी
णाम् ॥ ७ ॥ नमोस्तुसर्प्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्त
रिक्षे दिवितेभ्यःसर्प्पेभ्योनमः॥ ८ ॥ ब्रह्मयज्ञानम्प्रथमम्पु

रस्तुाह्विसीमुतः सुरुचोंव्वेनऽआंवः ॥ सुबुद्ध्याऽउपमाऽअंस्य व्विष्ट्वाःसुतश्च्च योनिमसंतश्च्च व्विवंः ॥९॥ अथ गणेशादिपंचदेवतामन्त्राः ॥ गुणानांन्त्वागुणपतिंꣳ हवामहे प्प्रियाणांन्त्वा प्प्रियपंतिꣳहवामहेनिधीनान्त्वांनिधिपतिꣳहवामहेव्वसोमम ॥ आहमंजानिगर्ब्भधमात्वमंजासिगर्ब्भधम् ॥ १ ॥ अम्बेऽअम्बिकेम्बालिकेनमांनयातिकश्च्चन ॥ ससंस्त्यश्च्चकꣳसुभद्द्रिकाङ्काम्पीलव्वासिनीम् ॥२॥ व्वातोंव्वामनोंव्वागन्धर्वाꣳसुप्तविꣳशतिः ॥

तेऽअग्रे श्वमयुञ्जँस्तेऽअस्मिन्नवमादधुः ॥ ३ ॥ घृतङ्घृतपा
वानः पिबतवसाँवसापावानः पिबतान्तरिक्षस्यहविरसिस्वाहा ॥
दिशः प्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यः स्वाहा ॥ ४ ॥
याबाङ्कशामधुमत्याश्विनासूनृतावती ॥ तयायज्ञम्मिमिक्षता
म् ॥ ५ ॥ अथ दिक्पालमन्त्राः ॥ त्रातारमिन्द्रमवितारमि
न्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳ
स्वस्तिनोमघवाधात्विन्द्रः ॥ १ ॥ अथ अग्निमन्त्रः ॥

त्वन्नोऽअग्ने व्वरुणस्य व्विद्वान्देवस्यहेडोऽअवयासिसीष्ठाः॥
यजिष्ठोव्वह्नितमःशोशुचानोव्विश्वाद्वेषाᳪसिप्रमुमुग्ध्यस्म्मत् ॥
॥ २ ॥ यममन्त्रः ॥ असियमोऽअस्स्यादित्योऽअर्व्वन्नसित्रि
तोगुह्येनव्व्रतेन॥ असिसोमेनसमयाव्विपृक्तऽआहुस्तेत्रीणिदि
विबन्धनानि ॥ ३ ॥ नैर्ऋतमन्त्रः ॥ ॥ असुन्वन्तमयजमान
मिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यमस्म्मदिच्छसा
तऽइत्यानमोदेविनिर्ऋतेतुब्भ्यमस्तु॥४॥वरुणमन्त्रः॥इमम्मेव

रुणश्रुधीहवंमुद्याचंमृडय ॥ त्वामंवुस्युराचंके॥५॥वायमन्त्रः
आनोंनियुद्भिंःशतिनींभिरध्वरꣳसंहस्रिणींभिरुपंयाहियज्ञम् ॥
वायोऽअस्मिन्त्सवनेमादयस्वयूयम्पातस्वुस्तिभिंः सदांनः
॥ ६ ॥ कुबेरमन्त्रः ॥ वुयꣳसोमव्वुतेतवुमनंस्तनूषुबिभ्रंतः ॥
प्रजावंन्तःसचेमहि ॥ ७ ॥ शिवमन्त्रः ॥ तमीशांनुञ्जगंतस्त
स्थुषस्पतिंन्धियञ्जिन्वमवंसेहूमहेव्वुयम्॥पूषानोयथावेदंसाम
संद्वृधेरंक्षितापायुरदंब्धःस्वुस्तयें ॥ ८ ॥ ब्रह्ममन्त्रः ॥ ब्रह्मंय

ब्रह्मजज्ञानम्प्रथमम्पुरस्ताद्विसीमतःसुरुचोवेन आवः ॥ सबुध्न्याऽ
उपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ ९ ॥
शेषमन्त्रः ॥ स्योनापृथिविनो भवानृक्षरानिवेशनि ॥
यच्छानःशर्म्मसप्रथाः ॥ १० ॥ अथ क्षेत्रपालमन्त्रः ॥
नहिस्पशमविदन्नन्यमस्म्माद्वैश्वानरात्पुरऽएतारमग्नेः ॥
एमेनमवृधन्नमृताऽअमर्त्त्यंवैश्वानरङ्क्षैत्रजित्यायदेवाः ॥ १ ॥
अथ अग्नेर्घ्यानमन्त्रः ॥ चत्वारिशृङ्गात्रयोऽअस्य पादाद्वे

शीर्षैस्सप्तहस्तांऽसोअस्य ॥ त्रिधाबुद्धोवृषुभोरोरवीतिमुहो देवो
मर्त्याँ२ ॥ ऽआविवेश ॥ १ ॥ अथाष्टाहुतिमन्त्राः ॥
त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजि
ष्ठोवह्नितमुश्शोशुचानोविश्वाद्वेषांर्ठसिप्रमुमग्ध्युस्स्मत्
॥१॥ सत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याऽउषसोव्युष्टौ ॥
अवंयक्ष्वनोवरुणर्ठरराणोवीहिमृडीकर्ठसहवानऽएधि ॥ २ ॥
इमम्मेवरुणश्श्रुधीहवमद्याचमृडय ॥ त्वामवुस्युराचके ॥३॥

तत्त्वायामिब्रह्मणाबन्दमानुस्तदाशास्तेयजमानोहविर्भिः ॥
अहेडमानोबरुणेहबोध्युरुशꣳसमानऽआयुःप्प्रमोषीः ॥ ४ ॥
अयाश्चाग्नेस्यनभिशस्तिपाश्चसत्वमित्वमयाऽअसि ॥ अया
नोयज्ञंवहास्ययानोधेहिभेषजꣳस्वाहा ॥ ५ ॥ येतेशतम्वरु
णयेसहस्रंयज्ञियाः पाशाबिततामहान्तः ॥ तेभिर्नोऽअद्यस
बितोताविष्णुर्व्विश्वेमुञ्चन्तुमरुतःस्वर्काः ॥ ६ ॥ उदुत्तमम्व
रुणपाशमस्म्मदवाधमंविमध्यमꣳश्रथाय ॥ अथाबयमादि

त्त्यव्व्रतेतुवानांगसोऽअदितयेस्स्याम ॥ ७ ॥ भवतन्नुःसमंन
सौसचेतसावरेपसौ ॥ मायुज्ञꣳहिꣳसिष्टम्मायुज्ञपतिञ्जातवेद
सौशिवौभवतमुद्यनः ॥ ८ ॥ अथ बर्हिर्होममन्त्रः ॥ देवांगा
तुविदोगातुंवित्वागातुमित ॥ मनसस्पतऽइमन्देवयुज्ञꣳस्स्वा
हाव्वातेधाः ॥ १ ॥ अथ पूर्णाहुतिमन्त्राः ॥ मूर्द्धानन्दिवोअ
रतिम्पृथिव्याव्वैश्वानरमृतऽआजातमुग्निम् ॥ कविꣳसम्म्राजु
मतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥ १ ॥ वसोःपवि

त्रंमसिशतधारम्वसोःपवित्रंमसिसहस्रधारम् ॥ देवस्त्वांसवि
तापुनातुवसोःपवित्रेणशतधारेणसुप्वा कामंधुक्षः ॥ २ ॥
पूर्णादर्विपरापत सुपूर्णापुनरापत ॥ वस्नेवविक्क्रीणावहाऽइषु
मूर्ज्जंशतक्रतो ॥ ३ ॥ पुनस्त्वादित्यारुद्रावसवःसमिन्धता
म्पुनर्ब्रह्माणोवसुनीथयज्ञैः ॥ घृतेनत्वन्तन्वंवर्द्धयस्वस
त्याःसन्तुयजमानस्यकामाः ॥ ४ ॥ अथ भस्मधारणमन्त्रः ।
त्र्यायुषञ्जमदग्नेःकश्यपस्यत्र्यायुषम् । यद्देवेषु त्र्यायुषं तन्नोऽ

अस्तुऽघायुषम् ॥ १ ॥ अथाभिषेकमन्त्राः ॥ ॐ आपोहिष्ठा
मयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणायचक्षसे ॥ १ ॥ योवः
शिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ २ ॥
तस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः
॥ ३ ॥ पुनन्तुमापितरःसोम्यासः पुनन्तुमापितामहाः पुनन्तुप्र
पितामहाः ॥ पवित्रेणशतायुषा ॥ पुनन्तुमापितामहाः पुनन्तु
प्रपितामहाः ॥ पवित्रेणशतायुषाविश्वमायुर्व्यश्नवै ॥ ४ ॥ अग्न

ऽआयूᳬंषि पवसुऽआसुवोर्ज्जुमिषंञ्चनः ॥ आरेबाधास्वदुच्छु
नाम् ॥ ५॥ पुनन्तुमादेवजुनाःपुनन्तुमनंसाधियं÷ ॥ पुनन्तुंवि
श्वाभूतानि जातवेदःपुनीहिमा॥६॥ पुवित्रेणपुनीहिमाशुक्रेणं
देवुदीद्यंत् ॥ अग्नेक्रत्वाक्रतूँ२ ॥ रनु॥ ७ ॥ यत्तेपवित्रंमुर्चि
ष्यग्नेवितंतमन्तुरा॥ ब्रह्मतेनंपुनातुमा ॥८॥ पवंमानुःसोऽअद्य
नं÷पुवित्रेणविचंर्षणिः ॥ यःपोतासपुनातुमा ॥९॥ उभाभ्यां
न्देवसावितःपुवित्रेणसुवेनंच ॥ मांपुनीहिविश्वतं÷ ॥ १० ॥

वैश्वदेवीपुनतीदेव्यागाद्यस्यामिमाबह्व्यस्तन्वोवीतपृष्ठाः ॥
तयामदन्तःसधमादेषुवयंस्यामपतयोरयीणाम् ॥ ११ ॥
चित्पतिर्म्मापुनातु वाक्पतिर्म्मापुनातु देवोमासविता पुनात्त्व
च्छिद्रेण पवित्रेणसूर्यस्यरश्मिभिः ॥ तस्यतेपवित्रपतेपवित्र
पूतस्ययत्कामःपुनेतच्छकेयम् ॥ १२ ॥ याऽओषधीःसोम
राज्ञीर्बह्वीःशतविचक्षणाः ॥ तासामसित्त्वमुत्तमारङ्कामाय
शंहृदे ॥ १३ ॥ याऽओषधीःसोमराज्ञीर्विष्ठिताःपृथिवी

मनु ॥ बृहस्पतिप्प्रसूताऽअस्यैसन्दत्तवीर्य्यम् ॥ १४ ॥ देव
स्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ सरं
स्वत्यैवाचोयन्तुर्य्यन्त्रियेदधामिबृहस्पतेष्ट्वासाम्राज्ज्येनाभिषि
ञ्चाम्यसौ ॥ १५ ॥ देवस्यत्वासवितुःप्प्रसवेश्विनोर्बाहुभ्यां
म्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यैवाचोयन्तुर्य्यन्त्रेणाग्नेःसाम्रा
ज्ज्येनाभिषिञ्चामि ॥ १६ ॥ देवस्यत्वासवितुःप्प्रसवेश्विनोर्बा
हुभ्याम्पूष्णोहस्ताभ्याम् । अश्विनोर्भैषज्ज्येनतेजसेब्रह्मवर्च

साम्राज्येनाभिषिञ्चामि सरस्वत्यै भैषज्ज्येन वीर्य्यायान्नाद्यायाभिषि
ञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेभिषिञ्चामि ॥ १७॥
द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषध
यः शान्तिः। वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः
सर्वꣳ शान्तिः शान्तिरेव शान्तिः सामाशान्तिरेधि ॥ १८ ॥
अथ देवतामंत्रः ॥ नमः शम्भवाय च मयोभवाय च नमः शङ्क
राय च मयस्कराय च नमः शिवाय च शिवतराय च ॥ १ ॥ विष्णु



मंत्रः ॥ इदंविष्णुर्व्विचंक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳪ
सुरेस्वाहा ॥ २ ॥ देवीमंत्रः ॥ अम्बेऽअम्बिकेम्बालिकेन
मानयातिकश्चन ॥ ससंस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासि
नीम् ॥ ३ ॥ गणेशमंत्रः ॥ गणानान्त्वागणपतिᳬहवामहे
प्प्रियाणान्त्वा प्प्रियपतिᳬहवामहे निधीनान्त्वानिधिपतिᳬ
हवामहेव्वसोमम ॥ आहमजानिगर्ब्भधमात्वमजासिग
र्ब्भधम् ॥ ४ ॥ सूर्य्यमन्त्रः ॥ आकृष्णेनरजसावर्तमा



नो निवेशयन्नमृतम्मर्त्यंञ्च॥हिरण्ययेन सविता रथेनादेवोयाति भुवनानिपश्यन् ॥ ५ ॥ त्र्यंबकमंत्रः ॥ त्र्यंबकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात् ॥ ६ ॥ ब्रह्ममंत्रः॥ ब्रह्मयज्ञानंप्रथमम्पुरस्ताद्विसीमतःसुरुचोवेनऽआवः।सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्चयोनिमसतश्चविवः॥ ७ ॥स्कन्दमन्त्रः ॥ यदक्रन्दःप्रथमंजायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूउपस्तु

त्युम्माहिंजातन्तेंऽअर्व्वन् ॥ ८ ॥ सर्प्पमंत्रः ॥ नमोस्तुसुर्प्पेभ्यो
येकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेभ्यः सुर्प्पेभ्यो
नमः ॥ ९ ॥ हनुमन्मंत्रः ॥ अस्मेरुद्रामेहनापर्व्वतासोवृत्र
हत्त्येभरहूतौसुजोषाः ॥ यःशंसंतेस्तुवतेधायिपुज्त्रऽइन्द्र
ज्ज्येष्ठाऽअस्मा२ँ ॥ अवंतुदेवाः ॥ १० ॥ सप्तऋषिमंत्रः ॥
सुप्तऽऋषयुः प्प्रतिहिताःशरीरेसुप्तरक्षान्तिसदुमप्रमादम् ॥
सुप्तापःस्वपतोलोकमीयुस्तत्रजागृतोऽअस्वप्पजौसत्रसदौच

द्देवौ ॥ ११ ॥ ध्रुवमंत्रः ॥ ध्रुवाक्षितिर्द्ध्रुवयोनिर्द्ध्रुवासिद्ध्रुवंछ्यो
निमासीदसाधुया ॥ उकरूयंस्यकेतुम्प्रंथमञ्जुषाणाश्विनाद्ध्व
र्य्युसादयतामिहत्त्वा ॥ १२ ॥ भूतमंत्रः ॥ भूतायत्वानारा
तयेस्वराभिविरूयषन्दृꣳहन्तान्दुर्य्याः ॥ पृथिव्यामुर्वन्तरिक्ष
मन्वेमिपृथिव्यास्त्वानाभौसादयाम्म्यादित्याऽ उपस्थेग्नेहव्य
ꣳरक्ष ॥ १३ ॥ विश्वकर्ममंत्रः ॥ विश्वंकर्म्मन्हविषावर्द्धने
नत्रातारमिन्द्रमकृणोरवद्ध्यम ॥ तस्मैविशःसमनमन्तपूर्वीरय



मुग्ग्रोाव्रिहद्योषथासंत् ॥१४॥ अगास्तिमंत्रः ॥कुम्भोवनिष्टुर्ज्ज
नितांशचीभिर्य्यस्म्मिन्नग्ग्रेयोन्यांगर्भोऽअन्तः ॥ प्लाशिर्व्य
क्तःशतधारऽउत्सोदुहेनंकुम्भीस्वधाम्पितृभ्यः।१५।काली
मंत्रः।कन्याऽइववहतुमेतवाऽउंऽअञ्ज्यज्ञानाऽअभिचाकशीमि।
यत्रसोमःसूयतेयत्रयज्ञोघृतस्यधाराऽअभितत्पवन्ते ॥१६॥
लक्ष्मीमन्त्रः ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्रा
णिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्वलो



कम्मऽइषाण ॥ १७ ॥ सरस्वतीमन्त्रः ॥ पञ्चनद्यःसरस्व
तीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशेभवत्सरित्
॥ १८ ॥ पृथ्वीमन्त्रः ॥ स्योनापृथिविनोभवानृक्षरानिवेशनी॥
यच्छानःशर्म्मसप्प्रथाः ॥ १९ ॥ अम्मन्त्रः ॥ अप्स्वग्ग्नेसधि
ष्टवसौषधीरनुरुद्ध्यसे ॥ गर्ब्भेसञ्जायसेपुनः ॥ २० ॥ तेजो
मन्त्रः ॥ ॥ अग्निंदूतम्पुरोदधेहव्यवाहमुपब्ब्रुवे ॥ देवाँ॥२॥ आ
सादयादिह ॥ २१ ॥ वायुमन्त्रः ॥ वातोवामनोवागन्धर्वाः



सुप्तविंᳬशतिᳬ ॥ तेऽअग्ग्रेश्श्वंमयुँञ्जुँस्ते ऽअंस्म्मिन्नज्ञुवमांदधुᳬ ॥२२॥ आकाशमन्त्रः॥यावुाङ्कशामधुमुत्त्याश्श्विनासूनृतावती। तयांयुज्ञम्म्मिमिक्षतम्म् ॥ २३ ॥ देवतापत्नीमन्त्रः ॥ तम्पत्त्नींभिरनुंगच्छेमदेवाᳬपुत्रैर्भ्भ्रातृंभिरुतवुाहिरंण्यैᳬ ॥ नाकङ्गृब्भ्णानाᳬसुकृतस्यंलोकेतृतीयेंपृष्ठेऽअधिंरोचुनेदिवः ॥ २४ ॥ ऋग्वेदमन्त्रः ॥ अग्निमींळेपुरोहिंतंयुज्ञस्यंदेवमृत्विजंम्म् ॥ होतांरंरत्नधातंमम्म् ॥ २५ ॥ यजुर्वेदमन्त्रः ॥ इषेत्त्वोर्ज्जेत्त्वावायवं



स्थदेवोवंःसवितापप्रार्प्पयतु श्रेष्ठतमायुकर्म्मणुऽआप्प्यायद्ध्व
मग्घ्न्याऽइन्द्रांयभागम्प्रजावंतीरनमीवाऽअंयुक्ष्म्मामावंस्तेनऽ
ईशतुमाघशंहसोद्ध्रुवाऽ अस्मिन्नगोपंतौस्यातबुह्वीर्य्यजंमान
स्स्य पुशून्पाहि ॥ २६ ॥ सामवेदमन्त्रः ॥ अग्नऽआयांहिवी
तयेंगृणानोहुव्यदांतये ॥ निहोतांसात्सिबुर्हिषि ॥ २७ ॥ अथ
र्वमन्त्रः ॥ शन्नोदेवीरुभिष्टयुऽआपोंभवन्तुपीतयें ॥ शंयोरुभि
स्स्रवन्तुनः ॥ २८ ॥ वास्तुमन्त्रः ॥ वास्तोष्पतेप्रतिजानीह्य

स्मान्स्वावेशोऽअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्व
शन्नो भवाद्द्विपदेशंचतुष्पदे ॥ २९ ॥ समुद्रमन्त्रः ॥ समुद्रोसि
नभस्वानार्द्रदानुःशम्भूर्म्मयोभूरभिमावाहिस्स्वाहा ॥ मारुतो
सिमरुताङ्गणःशम्भूर्म्मयोभूरभिमावाहिस्स्वाहा ॥ वस्यूरसिदु
वस्स्वाञ्छम्भूर्म्मयोभूरभिमावाहिस्स्वाहा॥ ३० ॥पर्वतमन्त्रः॥
प्प्रपर्वतस्स्यवृषभस्यपृष्ठान्नावश्चरान्तिस्स्वसिचऽइयानाः ॥
ताऽआववृत्रन्नधरागुदक्ताऽअहिम्बुद्ध्न्यमनुरीयमाणाः ॥ वि

ष्णोर्व्विक्क्रमणमसिव्विष्णोर्व्विक्क्रान्तमसिव्विष्णोः क्क्रान्तमसि
॥ ३१ ॥ संवत्सरमन्त्रः ॥ संव्वत्सरोसिपरिवत्सरोसीदावत्सरो
सीदुत्सरोसिवत्सरोसि ॥ उषसस्तेकल्पन्तामहोरात्रास्तेक
ल्पन्तामर्द्धमासास्तेकल्पन्ताम्मासास्ते कल्पन्तामृतवस्ते
कल्पन्ताᳬंसंव्वत्सरस्तेकल्पन्ताम्॥ ३२॥ ऋतुमंत्रः। वसन्तेन
ऋतुनादेवावसवस्त्रिवृतास्तुताः ॥ रथन्तरेणतेजसाहविरिन्द्रेव
योदधुः ॥ ३३ ॥ ग्रीष्मेणऽऋतुनादेवारुद्राःपञ्चदशेस्तुताः

बृहुतायशसाबलछहविरिन्द्रेवयोदधुः ॥ ३४ ॥ वुर्षाभिर्ऋतुना
दित्त्यास्तोमेसप्तदशेस्तुताः ॥ वैरूपेणविशौजसाहविरिन्द्रेवयो
दधुः॥ ३५ ॥ शारदेनऽऋतुनादेवाऽएकविछशाऽऋभवस्तुताः॥
वैराजेनाश्रियाश्रियछहविरिन्द्रेवयोदधुः ॥३६॥ हेमन्तेनऽऋतु
नादेवास्त्रिणवेमरुतस्तुताः ॥ बलेनशक्करीःसहोहविरिन्द्रेवयो
दधुः ॥ ३७ ॥ शैशिरेणऽऋतुनादेवास्त्रयस्त्रिठंशेमृतास्तुताः ॥
सत्येनरेवतीःक्षत्रछहविरिन्द्रेवयोदधुः॥३८॥ मासमन्त्रः॥अर्द्ध

मा॒साः॒ परू॑ᳫंषिते॒ मासा॒ऽआच्छ्य॑न्तु॒ शम्म्य॑न्तः ॥ अ॒हो॒रा॒त्राणि
म॒रुतो॒ विलि॑ष्टᳫं सूदयन्तु॒ ते ॥ ३९ ॥ पक्षमन्त्रः ॥ इ॒मौ ते॑ प॒क्षाव॒जरौ॑
प॒त॒त्रिणौ॒ याभ्या॒ᳫं रक्षा॒ᳫंस्य॑प॒हᳫंस्य॑ग्ने ॥ ताभ्यां॑ पतेम
सु॒कृता॑मु लो॒कं यत्र॒ऽऋष॑यो ज॒ग्मुः प्र॑थम॒जाः पु॑रा॒णाः ॥४०॥
शुक्लपक्षमन्त्रः ॥ अ॒ग्नेः प॑क्ष॒तिर्वा॒योर्नि॑पक्षा॒तिरिन्द्र॑स्य तृ॒तीया॒ सो
मस्य चतु॒र्थ्यदि॑त्यै पञ्च॒मीन्द्रा॒ण्यै ष॒ष्ठी म॒रुता॑ᳫं सप्त॒मी बृह॒स्पते॑
र॒ष्टम्य॑र्य॒म्णो न॑व॒मी धा॒तुर्द॑श॒मीन्द्र॑स्यैकाद॒शी वरु॑णस्य॒ द्वाद॒

शीयुमस्यत्रयोदशी ॥ ४१ ॥ कृष्णपक्षतिथिमन्त्रः ॥ इन्द्राग्न्योः पक्षतिः सरस्वत्यै निपक्षतिर्म्मित्रस्य तृतीयापाञ्चतुर्थी निर्ऋत्यै पञ्चम्यग्नीषोमयोः षष्ठी सर्पाणाᳬं सप्तमी विष्णोरष्टमी पूष्णो नवमी त्वष्टुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यम्यै त्रयोदशी द्यावापृथिव्योर्दक्षिणं पार्श्वं विश्वेषान्देवानामुत्तरम् ॥ ४२ ॥ दिनमन्त्रः ॥ अह्ने पारावतानालभते रात्र्यै सीचापूरहोरात्रयोः सन्धिभ्यो जतूर्म्मासेभ्यो दात्यौहान्त्संवत्सराय महतः सुपर्णान् ४३ ।

अथ नक्षत्रमन्त्राः ॥ तत्रअश्विनीमन्त्रः ॥ यावाङ्कशामधुमत्त्य
श्विनासूनृतावती। तयायज्ञम्मिमिक्षतम्। १।भरणीमन्त्रः। यमा
यंत्त्वामुखायंत्त्वासूठ्वैरस्यत्त्वातपंसे ॥ देवस्त्वांसावितामद्ध्वान
क्तुपृथिव्याःसंस्पृशस्पाहि ॥ अर्चिरसिशोचिरसितपोसि॥२॥
कृत्तिकामन्त्रः॥अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवेदेवाँ २ ॥
ऽआसादयादिह ॥ ३ ॥ रोहिणीमन्त्रः ॥ प्रजापतेनत्वदेतान्न्य
न्योविश्वारूपाणिपरिताबभूव॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तु

व्वयथंस्स्यामपतयोरयीणाम् ॥४॥ मृगशिरामन्त्रः॥ सोमोधेनुꣳसोमोअर्वन्तमाशुꣳसोमोव्वीरंकर्म्मण्यन्ददाति ॥ सादन्न्यंविदत्थ्यꣳसभेयम्पितृश्रवणय्योददाशदस्म्मै ॥५॥ आर्द्रामन्त्रः॥ इमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वम्पुष्टङ्ग्रामेऽअस्म्मिन्ननातुरम् ॥ ६ ॥ पुनर्वसुमन्त्रः॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता सपिता सपुत्रः॥ विश्वेदेवाऽअदितिः पञ्चजनाऽअदितिर्ज्जातमदितिर्ज्ज

नीत्वम् ॥७॥ पुष्यमन्त्रः ॥ बृहस्पते ऽ अति यदर्यो ऽ अर्हाद्द्युमद्वि
भाति क्रतुमज्जनेषु ॥ यद्दीदयच्छवस ऽ ऋतप्रजात तदस्मासु द्रविणं
धेहि चित्रम् ॥८॥ आश्लेषामन्त्रः ॥ नमोऽस्तु सर्पेभ्यो ये के
च पृथिवीमनु ॥ ये ऽ अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥९॥
मघामन्त्रः ॥ उदीरतामवर ऽ उत्परास ऽ उन्मध्यमाः पितरः सो
म्यासः ॥ असुं य ऽ ईयुरवृका ऽ ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु
॥१०॥ पूर्वामन्त्रः ॥ भग प्रणेतर्भग सत्यराधो भगेमां धियमुद

वादर्दन्नः ॥ भगप्प्रणोजनयगोभिरश्वैर्भगप्प्रनृभिर्न्नृवन्तः स्याम
॥११॥ उत्तरामन्त्रः ॥ अर्य्यमणम्बृहस्पतिमिन्द्रन्दानायचो
दय ॥ वाचंविष्णुᳬसरस्वतीᳬं सवितारञ्चवाजिनᳬं स्वाहा
॥१२॥ हस्तमन्त्रः ॥ उदुत्यञ्जातवेदसन्देवंवहन्तिकेतवः ॥ दृशे
विश्वायसूर्य्यम् ॥ १३ ॥ चित्रामन्त्रः ॥ त्वष्टातुरीपोऽअद्भुतऽ
इन्द्राग्नीपुष्टिवर्द्धना ॥ द्विपदाच्छन्दऽइन्द्रियमुक्षागौर्न्नवयोदधुः
॥१४॥ स्वातीमन्त्रः ॥ वायुरग्रेगायज्ञप्रीः साकङ्गन्मनसायज्ञम् ।

शिवोनियुद्भिः शिवाभिः ॥ १५ ॥ विशाखामन्त्रः ॥ इन्द्राग्नी
आगतꣳ सुतङ्गीर्भिर्नभोवरेण्यम् ॥ अस्स्यपातन्धियेषिता
॥ १६ ॥ अनुराधामन्त्रः ॥ नमोमित्रस्स्यवरुणस्स्यचक्षसेम
होदेवायतदृतꣳसपर्य्यत ॥ दूरेदृशेदेवजातायकेतवेदिवस्पुत्रा
यसूर्य्यायशꣳसत ॥ १७ ॥ ज्येष्ठामन्त्रः ॥ त्रातारमिन्द्रमवि
तारमिन्द्रꣳ हवेहवेसहवꣳ शूरमिन्द्रम् ॥ ह्वयामि शक्रम्पुरुहूत
मिन्द्रꣳस्वस्तिनोमघवाधात्विन्द्रः ॥ १८ ॥ मूलमन्त्रः ॥

मुताचंतेपिताचतेग्रंवृक्षस्यंरोहतः ॥ प्रतिलामीतितेपितागभे
मष्टिमंतक्ष्सयत् ॥ १९ ॥ पूर्वाषाढामन्त्रः ॥ अपांघमदामिशं
स्तीरशस्तिहाथेन्द्रोद्युम्न्नायाभवत् ॥ देवास्तंऽइन्द्रसख्याययेे
मिरबृहद्भानोमरुद्रण ॥ २० ॥ उत्तराषाढामन्त्रः ॥ विश्वेदे
वासऽआगंतशृणुतामंइमक्ष्हवम् ॥ एदम्बर्हिर्निषीदत ॥ २१॥
श्रवणमन्त्रः ॥ विष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोः
स्स्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥ २२ ॥

धनिष्ठामन्त्रः ॥ वसोः पवित्रमसि द्यौरसि पृथिव्यसि मातरि
श्वनो घर्मोसि विश्वधा असि ॥ परमेण धाम्ना दृंहस्व मा
ह्वार्मा ते यज्ञपतिर्ह्वार्षीत् ॥ २३ ॥ शततारकामन्त्रः ॥ वरुण
स्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनीस्थो वरुणस्य ऽ
ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद
॥ २४ ॥ पूर्वाभाद्रपदामन्त्रः ॥ त्वन्नो अग्ने वरुणस्य विद्वान्दे
वस्य हेडो ऽअवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो वि

श्वाद्वेषा॑ᳪंसि॒ प्र मु॑मुग्ध्य॒स्मत् ॥ २५ ॥ उत्तराभाद्रपदामन्त्रः ॥
अहि॑रिव भो॒गैः पर्ये॑ति बा॒हुं ज्याया॑ हे॒तिं प॑रि॒बाध॑मानः ॥
ह॒स्त॒घ्नो विश्वा॑ व॒युना॑नि वि॒द्वान्पुमा॒न्पुमा॑ᳪंसं॒ परि॑ पातु वि॒श्वतः॑
॥ २६ ॥ रेवतीमन्त्रः ॥ पूष॒न्तव॑ व्र॒ते व॒यन्न रि॑ष्येम॒ कदा॑चन ॥
स्तो॒तार॑स्त इ॒ह स्म॑सि ॥ २७ ॥

इति माध्यन्दिनीयमन्त्रसंहिता समाप्ता ॥

इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मज-गंगाविष्णुना स्वकीये " लक्ष्मीवेंकटेश्वर " मुद्रणालये मुद्रयित्वा प्रकाशितम् । संवत् १९८६, शके १८५१ ।

---

पुस्तक मिलनेका ठिकाना–

| गङ्गाविष्णु श्रीकृष्णदास,<br>" लक्ष्मीवेंकटेश्वर " स्टीम् प्रेस,<br>कल्याण–बंबई. | खेमराज श्रीकृष्णदास,<br>" श्रीवेंकटेश्वर " स्टीम् प्रेस,<br>खेतवाडी–बंबई. |
|---|---|

॥४२॥

# अत्रेयमभ्यर्थना।

अत्रास्माकं मुद्रणालये ऋग्वेदादयो वेदा उपनिषदो वेदान्तग्रन्था महाभारतादीतिहासाः श्रीमद्भागवतादि-महापुराणोपपुराणानि धर्मशास्त्र-कर्मकाण्ड-व्याकरण-न्याय-योग-सांख्य-मीमांसादिशास्त्रीयग्रन्थाः काव्य-नाटक-चम्पू-प्रभृतयो ग्रन्थाः सहस्र-मामाद्यनेकस्तोत्रग्रन्थाश्च विविधभाषाग्रन्थाश्च सीसकोत्तममहल्लक्ष्यक्षरैर्म-नोहरं मुद्रिता आसते योग्यमूल्येन क्रय्याः सन्ति, तांश्च ग्राहकाः यथापुस्तकसूचीपत्रं मूल्यप्रेषणेन प्राप्नुयुः।

---

पुस्तक मिलनेका ठिकाना-

| | |
|---|---|
| गङ्गाविष्णु श्रीकृष्णदास, 'लक्ष्मीवेङ्कटेश्वर' स्टीम् प्रेस, कल्याण-बंबई. | खेमराज श्रीकृष्णदास, 'श्रीवेङ्कटेश्वर' स्टीम् प्रेस, खेतवाडी-बंबई. |

इति माध्यन्दिनीयमंत्रसंहितासमाप्ता ।